# श्रीश्रीहरिकुसुमस्तवः

गतिगञ्जितमत्ततरद्विरदं
रदनिन्दितसुन्दरकुन्दमदम् ।
मदनार्बुदरूपमदघ्नरुचिं
रुचिरस्मितमञ्जरि मञ्जुमुखम् ॥१ ॥

मुखरीकृतवेणुहृतप्रमदं
मदवल्गितलोचनतामरसम् ।
रसपूरविकासककेलिपरं
परमार्थपरायणलोकगतिम् ॥२ ॥

गतिमण्डितयामुनतीरभुवं
भुवनेश्वरवन्दितचारुपदम् ।
पदकोज्ज्वलकोमलकण्ठरुचं
रुचकात्तविशेषकवल्गुतरम् ॥३ ॥

तरलप्रचलाकपरीतशिखं
शिखरीन्द्रधृति प्रतिपन्नभुजम् ।
भुजगेन्द्रफणाङ्गणरङ्गधरं
धरकन्दरखेलनलुब्धहृदम् ॥४ ॥

हृदयालुसुहृद्गणदत्तमहं
महनीयकथाकुलधूतकलिम् ।
कलिताखिलदुर्जयबाहुबलं
बलवल्लवशावकसंनिहितम् ॥५ ॥

हितसाधुसमीहितकल्पतरुं
तरुणीगणनूतनपुष्पशरम् ।
शरणागतरक्षणदक्षतमं
तमसाधुकुलोपलचण्डकरम् ॥६ ॥

करपद्ममिलत्कुसुमस्तवकं
बकदानवमत्तकरीन्द्रहरिम् ।
हरिणीगणहारकवेणुकलं
कलकण्ठरवोज्ज्वलकण्ठरणम् ॥७ ॥

रणखण्डितदुर्जनपुण्यजनं
जनमङ्गलकीर्तिलताप्रभवम् ।
भवसागरकुम्भजनामगुणं
गुणसङ्गविवर्जितभक्तगणम् ॥८ ॥

गणनातिगदिव्यगुणोल्लसितं
स्मितरश्मिसहोदरवक्त्रवरम् ।
वरदृप्तवृषासुरदारघनं
घनविभ्रमवेशविहारमयम् ॥९ ॥

मयपुत्रतमःक्षयपूर्णविधुं
विधुरीकृतदानवराजकुलम् ।
कुलनन्दनमत्र नमामि हरिम् ॥१० ॥

उरसि परिस्फुरदिन्दिरमिन्दिन्दिरमन्दिरस्रजोल्लसितम् ।

हरिमङ्गनातिमङ्गलमङ्गलसच्चन्दनं वन्दे ॥११ ॥

इति श्रीरूपगोस्वामिविरचितस्तवमालायां श्रीश्रीहरिकुसुमस्तवः

समाप्तः